## २. वेदाङ्गानि, तेषां वेदार्थबोधोपयोगिता

वेदार्थबोधाय सत्स्वपि ग्रन्थेषु तद्विनियोगज्ञानाय चासीद् महत्यावश्यकता कैश्चित् सहायकग्रन्थानाम्। एतदभावपूर्तये एव आविरभवद् वेदाङ्गानाम्। षडिमानि वेदाङ्गानि। १ शिक्षा, २ व्याकरणम्, ३ छन्दः, ४ निरुक्तम्, ५ ज्योतिषम्, ६ कल्पः। तथा चोच्यते—'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः। ज्योतिषामयनं चैव वेदाङ्गानि षडेव तु'। षडिमान्यङ्गानि वेदार्थबोधादिविधौ उपकुर्वन्तीति निरूप्यतेऽत्र। एषामेतेषां महत्त्वं निर्दिश्यैव प्रतिपाद्यते पाणिनीयशिक्षायाम् —"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते" ॥ (श्लो० ४१-४२)।

वेदाङ्गानामेतेषां विवरणं तेषां वेदार्थबोधोपयोगिता च समासतोऽत्र प्रस्तूयते। (१) शिक्षा—शिक्षाग्रन्था वर्णोच्चारणविधिं विशेषतो वर्णयन्ति। कथं वर्णा उच्चारणीयाः, किं तेषां स्थानम्, कस्य तत्र प्रयत्नः, कण्ठताल्वादीनामुच्चारणे किं महत्त्वम्, कति वर्णाः, कथं कायमारुतो वर्णत्वेन विपरिणमते, कति स्थानानि, कति स्वराः, कथं च ते प्रयोज्या इत्यादयो विषयाः शिक्षाग्रन्थेषु विविच्यन्ते। वर्णोच्चारणादिविधिज्ञानमन्तरेण न शक्यो वेदानां विशुद्धः पाठोऽध्ययनमध्येति शिक्षाग्रन्थानां विशिष्टं महत्त्वम्। साम्प्रतं केचन शिक्षाग्रन्था उपलभ्यन्ते। तेषां सम्बन्धः कैश्चिद् विशिष्टेन वेदेन वर्तते। तद्यथा—ऋग्वेदस्य पाणिनीयशिक्षा, शुक्लयजुर्वेदस्य याज्ञवल्क्यशिक्षा, कृष्णयजुर्वेदस्य व्यासशिक्षा, सामवेदस्य नारदशिक्षा, अथर्ववेदस्य च माण्डूकीशिक्षा। अन्येऽपि केचन शिक्षाग्रन्थाः सन्ति। यथा—भरद्वाजशिक्षा, वसिष्ठशिक्षादयः। (२) व्याकरणम्—व्याकरणे प्रकृति-प्रत्ययस्य विचारः, उदात्तादिस्वरविचारः, उदात्तादिस्वरसञ्चारनियमाः, सन्धि-नियमाः, शब्दरूपधातुरूपादिनिर्माणनियमाः, प्रकृतेः प्रत्ययस्य च स्वरूपावधारणे तदर्थनिर्धारणे चेति विविधा विषया विविच्यन्ते। वेदेषु प्रकृति-प्रत्ययविचारस्य स्वरस्य च महत्त्वादर्थमपि तत्र व्याकरणमेव ज्ञानमनुतिष्ठतीति षडङ्गेषु व्याकरणमेव प्रधानम्। वैदिकव्याकरणं प्रातिशाख्यमूलकमेव। वेदानां प्रतिशाखामाश्रित्य व्याकरणग्रन्था आसन्, ते च प्रातिशाख्यग्रन्था इति पप्रथिरे। केचन एव प्रातिशाख्यग्रन्थाः साम्प्रतमुपलभ्यन्ते। ते एकैकवेदमाश्रित्य वर्तन्ते। तद्यथा—ऋग्वेदस्य शाकलशाखायाः शौनकप्रणीतम् ऋक्प्रातिशाख्यम्। एतदेव पार्षदसूत्रमित्यप्यभिधीयते। शुक्लयजुर्वेदस्य माध्यन्दिन-शाखायाः कात्यायनविरचितं शुक्लयजुःप्रातिशाख्यम्। कृष्णयजुर्वेदस्य तैत्तिरीय शाखायाः तैत्तिरीयप्रातिशाख्यम्। सामवेदस्य सामप्रातिशाख्यं (पुष्पसूत्रं वा), पञ्च विधसूत्रं च। अथर्ववेदस्य अथर्वप्रातिशाख्यं (चातुरध्यायिका वा)। ऐन्द्रसम्प्रदाय

२ सर्वोपनिषदो गावो, दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता, दुग्धं गीतामृतं महत् ॥

कस्य न विदितं विपश्चितो भगवद्गीताया गुणगौरवम् । गीतेयं न केवलं प्रस्तौति सर्वासामुपनिषदां सारभागम्, अपि तु श्रुतिसारमपि प्रस्तौतितराम् । सांख्ययोगदर्शनयोः सिद्धान्तानां वैशद्येन विवेचनात् प्रतिपादनाच्च दर्शनशास्त्रग्रन्थोऽप्ययमुपकल्प्यते । वेदान्तदर्शनप्रतिपादितस्य तत्त्वमसीति महावाक्यस्याप्यत्रोपलम्भात् वेदान्तावगाहित्वमप्यस्य स्फुरते । सेयं सरलया भाषाभिव्यक्तिप्रक्रियया, भूयिष्ठयाऽर्थगाम्भीर्यया प्रौढया प्रसन्नया, श्रेष्ठया विशुद्धिरम्यया साधिकया योगसाधनावीथ्यया चरित्रमाऽऽत्मविशुद्धिविधया सर्वानपि लोकस्यार्थानुभवति । प्रत्येवात्र समासत उपस्थाप्यन्ते विविच्यन्ते च ।

(१) निष्कामकर्मयोगस्य वर्णनं महत्या विस्तृत्या समुपलभ्यते गीतायाम् । तद्यथा—कर्मण्येवाधिकारस्ते, मा फलेषु कदाचन । (गीता २ ४७) । विहायासक्तिं फलप्रेप्सामना सक्त कर्मणि प्रवर्तितव्यम् । निष्कामकर्मयोगप्रतिपादकाः केवलं श्लोका अत्र दिङ्मात्रं निर्दिश्यन्ते । योगस्थः कुरु कर्माणि (२ ४८) कर्मयोगेन योगिनाम् (३ ३), न कर्मणामनारम्भात् (३ ४), कार्यते ह्यवशः कर्म (३ ५) यस्त्विन्द्रियाणि मनसा० (३-७) नियतं कुरु कर्म त्वं (३-८) तस्मादसक्तः सततं (३ १९) कर्मणैव हि संसिद्धिम् (३ २० ), सक्ताः कर्मण्यविद्वांसो (३ २५), कुरु कर्मैव तस्मात् त्वं (४ १५), कर्मणो ह्यपि बोद्धव्यं (४ १७), कर्मण्यकर्म (४ १८) त्यक्त्वा कर्मफलासङ्गं (४ २० ), कर्मयोगो विशिष्यते (५ २) । निष्कामकर्मयोगस्य वर्णनं मूलरूपेण यजुर्वेदे चत्वारिंशत्तमेऽध्याये ईशोपनिषदि च समाप्यते । तद्यथा—कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे (यजु ४०-२, ईश २) ।

(२) गीतायां यज्ञस्य महत्त्वं तस्यावश्यकर्तव्यता च निरूप्यते । तद्यथा—सहयज्ञाः प्रजाः (३ १० ), देवान् भावयतानेन (३ ११) इष्टान् भोगान् (३ १२), यज्ञशिष्टाशिनः (३ १३), अन्नाद् भवन्ति भूतानि (३ १४, १५), एवं प्रवर्तितं चक्रं (३ १६), दैवमेवापरे यज्ञं (४ २५-२७), द्रव्ययज्ञास्तपोयज्ञा (४ २८), यज्ञशिष्टामृतभुजो (४ ३१-३३) । यज्ञेनाऽपि नोज्झितव्यो यागः । यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् (१८-५) । यज्ञस्य महत्त्वं तदुपयोगिता तत्सम्बन्धिनश्च प्रतत्त्वो मन्त्रेषु यजुर्वेदे वर्ण्यते । तद् दिङ्मात्रमिह निर्दिश्यते—पाहि यज्ञं पाहि यज्ञपतिं (यजु० २ ६), हविष्मानसि दुवस्वत (यजु १ १-५), देवान् दिवमगन् यज्ञः (यजु ८-६ ), आयुर्यज्ञेन कल्पतां (यजु ९ २१), यज्ञो नो अभिपातु (१५ १८ १९) उद्बुध्यस्वाग्ने (यजु १५ ५४-५६) अग्नीषोमा० (यजु २१-५८) अयं यज्ञो भुवनस्य नाभिः (यजु २३-६२), तस्माद् यज्ञात् सर्वहुतः (३१ ६ ९), यज्ञेनायज्ञमयजन्त (३१ १४), यज्ञेन यज्ञमयजन्त (३१ १६) । यज्ञमहत्त्वप्रतिपादकानि मन्त्रस्थानानि—(यजु ६ २५, ८-६१, ९ १, ११-८, १२ ४४ १७-५२ १७-७६, १८ २९, १९ ११, २२ ३३) ।

(३) कर्मकाण्डस्य ज्ञानापेक्षया गौणत्वं प्रतिपाद्यते गीतायाम् । यामिमां पुष्पितां वाचं० (२ ४२ ४३) । विषयोऽयं विस्तरशो वर्ण्यते मुण्डकोपनिषदि । तद्यथा—प्लवा ह्येते अदृढा

११

बोधाय च पाणिनेरष्टाध्यायी सर्वप्रमुखा । अन्ये प्राचीना व्याकरणग्रन्था लुप्तप्राया एव । (३) छन्दः—वेदेषु मन्त्राः प्रायश्छन्दोबद्धा एव । अतो वृत्तज्ञानाय छन्दोज्ञानमनिवार्यम् । छन्दोज्ञानविषयको मुख्यो ग्रन्थः पिङ्गलप्रणीतं छन्दःसूत्रमेवोपलभ्यते । प्रातिशाख्यग्रन्थेष्वपि वृत्तविचारः प्राप्यते । (४) निरुक्तम्—निरुक्ते क्लिष्टवैदिकशब्दानां निर्वचनं प्राप्यते । विषयेऽस्मिन् यास्कप्रणीतं निरुक्तमेव प्रमुखो ग्रन्थः । अत्र मन्त्राणां निर्वचनमूलिकाया व्याख्यायाः प्रथमः प्रयासः समासाद्यते । वैदिकशब्दानां संग्रहात्मको ग्रन्थो निघण्टुरिति कथ्यते । तस्यैव व्याख्यानभूतं निरुक्तमेतत् । यास्को निरुक्ते स्वपूर्ववर्तिनां चतुर्दश निरुक्तकारान् परिगणयति । निरुक्ते काण्डत्रयं नैघण्टुककाण्डं नैगमकाण्डं दैवतकाण्डं चेति । (५) ज्योतिषम्—शुभे मुहूर्ते यागादिकस्यैव विधिर्वेदेऽस्ति । यागविधिशुभमुहूर्तज्ञानाय ज्योतिषस्योपयोगोऽभूत् । अत्र सूर्यचन्द्रमसोर्ग्रहाणां नक्षत्राणां च गतिर्निरीक्ष्यते परीक्ष्यते विविच्यते च । सौरमासस्य चान्द्रमासस्योभयं परिगण्यतेऽत्र । यज्ञमुहूर्तनिर्धारणे चान्द्रमासस्य प्राधान्यं परिलक्ष्यते । विषयेऽस्मिन् आचार्यलगधप्रणीतं 'वेदाङ्गज्योतिषम्' इति ग्रन्थ एव साम्प्रतमुपलभ्यते । (६) कल्पः—कल्पसूत्रेषु विविधयज्ञानां संस्कारादीनां च वर्णनं प्राप्यते । मन्त्राणां विविधकर्मसु विनियोगस्तत्र प्रतिपाद्यते । कल्पसूत्राणि चतुर्धा विभज्यन्ते—(क) श्रौतसूत्रम्, (ख) गृह्यसूत्रम्, (ग) धर्मसूत्रम्, (घ) शुल्बसूत्रं च । (क) श्रौतसूत्रम्—श्रौतसूत्रेषु श्रुतिप्रतिपादितानां सप्त हविर्यज्ञानां सप्त सोमयज्ञानामेवं चतुर्दशयज्ञानां विधानं विधिविनियोगादिकं च प्रतिपाद्यते । तत्र प्रमुखाणि श्रौतसूत्राणि सन्ति—आश्वलायनश्रौतसूत्रम्, शांखायनश्रौतसूत्रम्, बौधायन , आपस्तम्ब , कात्यायन , मानव , हिरण्यकेशी , लाट्यायन , द्राह्यायण , वैतान श्रौतसूत्रं च । श्रौतसूत्राणीमानि कमप्येकं वेदमाश्रित्य वर्तन्ते । (ख) गृह्यसूत्रम्—गृह्यसूत्रेषु षोडशसंस्काराणां पञ्चमहायज्ञानां सप्तपाकयज्ञानामन्येषां च गृह्यकर्मणां सविधि वर्णनमाप्यते । गृह्यसूत्राण्यपि कमप्येकं वेदमाश्रित्य वर्तन्ते । तत्र प्रमुखाणि सन्ति—आश्वलायनगृह्यसूत्रम्, पारस्कर , शांखायन , बौधायन , आपस्तम्ब , मानव , हिरण्यकेशी , भारद्वाज , वाराह , काठक , कौषीतकि , गोभिल , द्राह्यायण , जैमिनीय• खादिरगृह्यसूत्रं च । (ग) धर्मसूत्रम्—धर्मसूत्रेषु मानवानां कर्तव्यं नीतिर्धर्मो रीतयश्च वर्णाश्रमाणां कर्तव्याकर्तव्यं सामाजिकनियमादिकं वर्ण्यते । तत्र प्रमुखा ग्रन्थाः सन्ति—बौधायनधर्मसूत्रम्, आपस्तम्ब , हिरण्यकेशी• वसिष्ठ , मानव , गौतमधर्मसूत्रं च । (घ) शुल्बसूत्रम्—शुल्बसूत्रेषु यज्ञवेद्या मानादिकं वेदीनिर्माणविध्यादिकं च वर्ण्यते । तत्र मुख्या ग्रन्थाः सन्ति—बौधायनशुल्बसूत्रम्, आपस्तम्ब , कात्यायन , मानवशुल्बसूत्रं च । एवं षडिमानि वेदाङ्गानि वेदार्थज्ञाने तत्प्रयोगावगमने चोपयुक्तानि सन्ति ।

३ सर्वोपनिषदो गावो, दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीर्भोक्ता, दुग्धं गीतामृतं महत् ॥

कस्य न विदितं विपश्चितो भगवद्गीताया गुणगौरवम्। गीतेयं न केवलं प्रस्तौति तासामप्युपनिषदां सारभागम्, अपि तु श्रुतिसारमपि प्रस्तौतितराम्। सांख्ययोगदर्शनयोः सिद्धान्तानां वैशद्येन विवेचनात् प्रतिपादनाच्च दर्शनसारसंग्रहोऽप्यत्रोपलभ्यते। वेदान्तदर्शनप्रतिपादितस्य तत्त्वमसीति महावाक्यस्याप्यत्रोपलम्भाद् वेदान्तावगाहित्वमप्यस्य लक्ष्यते। सेयं सरलया भाषाभिव्यक्तिप्रक्रियया, भूयिष्ठयाऽर्थगम्भीरतया, प्रेयसा पदतया, श्रेयसा विद्वद्विमर्शनया, साधिष्ठया योगसाधनाबोधनया, वरिष्ठयाऽऽत्मविशुद्धिशिक्षया सर्वस्यापि लोकस्यादरमनुभवति। एतदेवात्र समासत उपस्थाप्यते विविच्यते च।

(१) निष्कामकर्मयोगस्य वर्णनं महत्या विस्तरेण समुपलभ्यते गीतायाम्। तद्यथा—कर्मण्येवाधिकारस्ते, मा फलेषु कदाचन। (गीता २ ४७)। विहायासक्तिं फलप्रेप्सामना सदा कर्मणि प्रवर्तितव्यम्। निष्कामकर्मयोगप्रतिपादकाः केचन श्लोका अत्र दिङ्मात्रं निर्दिश्यन्ते। योगस्थः कुरु कर्माणि (२ ४८) कर्मयोगेन योगिनाम् (३ ३), न कर्मणामनारम्भात्० (३ ४) कार्यते ह्यवशः कर्म (३ ५) यस्त्विन्द्रियाणि मनसा (३-७), नियतं कुरु कर्म त्वं (३-८), तस्मादसक्तः सततं (३ १९) कर्मणैव हि संसिद्धिम् (३-२०) सक्ताः कर्मण्यविद्वांसो (३ २५) कुरु कर्मैव तस्मात् त्वं (४ १५), कर्मणो ह्यपि बोद्धव्यं (४ १७), कर्मण्यकर्म (४ १८), त्यक्त्वा कर्मफलासङ्गं (४ २०), कर्मयोगो विशिष्यते (५ २)। निष्कामकर्मयोगस्य वर्णनं मूलरूपेण यजुर्वेदे चत्वारिंशत्तमेऽध्याये ईशोपनिषदि च समाम्नायते। तद्यथा—कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे (यजु ४० २, ईश० २)।

(२) गीतायां यज्ञस्य महत्त्वं तस्यावश्यकर्तव्यता च निरूप्यते। तद्यथा—सहयज्ञाः प्रजाः (३ १०), देवान् भावयतानेन (३ ११) इष्टान् भोगान् (३ १२), यज्ञशिष्टाशिनः (३ १३), अन्नाद् भवन्ति भूतानि (३ १४, १५) एवं प्रवर्तितं चक्रं (३ १६), दैवमेवापरे यज्ञं (४ २५ २७), द्रव्ययज्ञास्तपोयज्ञा (४ २८), यज्ञशिष्टामृतभुजो (४ ३१-३३)। यतिनाऽपि नोज्झितव्यो यागः। यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् (१८-५)। यज्ञस्य महत्त्वं समुपयोगिता तत्स्वरूपादिकं च बहुधा मन्त्रेषु यजुर्वेदे वर्ण्यते। तद् दिङ्मात्रमिह निर्दिश्यते—पाहि यज्ञं पाहि यज्ञपतिं (यजु १-२) समिधाग्निं दुवस्यत (यजु ३ १-५), देवान् दिवमगन् यज्ञः (यजु ८-६०), आयुर्यज्ञेन कल्पतां (यजु ९ २१) भद्रो नो अग्निराहुतो (१५ ३८ ३९) उद्बुध्यस्वाग्ने (यजु १५ ५४-५५), अग्नीषोमाः (यजु २१-५८), अयं यज्ञो भुवनस्य नाभिः (यजु २३-६२), तस्माद् यज्ञात् सर्वहुतः (३१ ६ ७), वसन्तोऽस्यासीदाज्यं (३१ १४), यज्ञेन यज्ञमयजन्त (३१ १६)। यज्ञमहत्त्वप्रतिपादकानि मन्त्रान्तराणि—(यजु ९-२५, ८-३१, ३ ३, १९-८, १९ ४४, १७-५२ १७-७०, १८ २९, १९ १२, २२ ३३)।

(३) कर्मकाण्डस्य ब्रह्मज्ञानापेक्षया गौणत्वं प्रतिपाद्यते गीतायाम्। यामिमां पुष्पितां वाचं (२ ४२ ४४)। विषयोऽयं विस्तरतो वर्ण्यते मुण्डकोपनिषदि। तद्यथा—प्लवा ह्येते अदृढा

## ८ दण्डिनः पदलालित्यम्

महाकवेर्दण्डिनो कविकालविषये सन्ति बहवो विप्रतिपत्तयः । समासतः षष्ठशत-मुपन्यस्तेनाङ्गीक्रियते । कैश्चनेस्वीयाब्दस्य षष्ठशताब्द्या अन्तिमे चरणेऽस्य कविमुखीकुर्वन्त्यन्ये च सप्तमशताब्द्याः पूर्वार्धे । राजशेखरेण कविरसौ प्रबन्धत्रयस्य प्रणेतेति प्रतिपाद्यते । विषयेऽस्मिन्नपि प्रचुरो विवादः । काव्यादर्शो दशकुमारचरितं चेति ग्रन्थद्वयं तु सर्वैरेव स्वीक्रियते दण्डिनः कृतित्वेन । अवन्तिसुन्दरीकथेति सम्प्रति उपलब्धा कृतिस्तृतीयेति मन्यते मनीषिभिः कैश्चित् ।

दशकुमारचरितनामधेयस्यास्य महती महनीयतेति नात्र विप्रतिपत्तिर्विदुषाम् । गद्यकाव्यस्यैतस्य गौरवं पदलालित्यं च प्रेयं प्रेयं प्रेक्षावतां प्राप्यन्ते प्रभूतानि प्रभूतप्रशंसापूर्णानि पद्यानि । 'कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः' । केचन वाल्मीकिव्यासयोरानन्तरं दण्डिनमेव महाकवित्वेनाकल्पयन्ति । 'जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् । कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि' । मधुरमधुरमहाकाव्यस्य रचयित्री गङ्गादेवी (११८ ई) तु दण्डिनो वाचं सरस्वत्या मणिदर्पणमेव मनुते । आचार्य दण्डिनो वाचामाचान्तामृतसम्पदाम् । विकासो वेधसः पत्न्या विलासमणिदर्पणम् ।

किं नाम पदलालित्यम् ? कथं चैतेन काव्यस्य महत्त्वमभिवर्धते ? सुप्तिङन्तं पदमिति सुबन्तं तिङन्तं वा पदमित्यभिधीयते । ललितस्य भावो लालित्यं माधुर्यमिति । यत्र पदेषु वाक्येषु शब्दसंघटनायां वा माधुर्यं श्रुतिसुखत्वं वा समुपलभ्यते, तत्र पदलालित्यमिति मन्यते । पदलालित्यं शब्दसौष्ठवं चावर्जयति सचेतसां चेतांसीति गुणोऽयं गरिमाणं तनुते काव्यस्य । दशकुमारचरिते दृश्यते गुणस्यैतस्य गौरवम् । तदेव समासतो नातिविस्तराल्लिख्यते ।

शब्दालङ्कारभारभरितेव भारती दण्डिन आभाति । सुधीभिरास्वादनीयं समीक्षणीयं चैतस्य माधुर्यम् । राजहंसस्यैव यशो राजहंसस्य सुषमा समवलोकयन्तु सन्तः । "अनवरतयागदक्षिणारक्षितशिष्टविशिष्टविद्यासम्भारभासुरभूसुरनिकरः, राजहंसो नाम घनदर्पकन्दर्पसौन्दर्यसोदर्यहृद्यनिरवद्यरूपो भूपो बभूव" (पूर्वपीठिका उच्छ्वास १) । राजहंसस्य महिषी वसुमती कस्याञ्चित्कुसुमसममूर्तिरभूत् । 'तस्य वसुमती नाम सुमती लीलावती कुलशेखरमणी रमणी बभूव (पू उ १) । मालवेश्वरस्य प्रस्थानवर्णनं कुर्वताऽभिधीयते तेन—'मालवनाथोऽप्यनेकानेकपयूथसनाथो विग्रहः सविग्रह इव साग्रहोऽभिमुखीभूय भूयो निर्जगाम' (पू उ १) । राजहंसस्य मालवराजचमूं सरोषमभितोऽवारयत् । 'राजहंसस्तु प्रशस्तवीतदैन्यसैन्यसमेतोऽसोढाभियोगतया निर्गत्याधिकरुषं रिपुं रुरोध' (पू उ १) ।

विजयार्थं प्रस्थातुकामानां कुमाराणां यमकालङ्कारमण्डितं वचनमतो दण्डिना गौरवमेवाभिमांसयति । 'कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमीरणा रणाभियानेन यानेनाभ्युदयाशंसं राजानमकार्षुः ।' (पू उ २) । दयादिकृतेन्द्रबन्धदर्शनहर्षेण दण्डिना वचनमेतत्—'तस्य तु विपदं विरतुष्यर्थं बभूव.

विविधविद्यापारदृश्वा श्रीहर्षः । विविधदर्शनसिद्धान्तानां व्याकरणादिशास्त्रसिद्धान्तानां चात्रोल्लेखात् संजायते नैषधचरिते महत् काठिन्यम् । अतो विद्वदौषधमेतत् काव्यमुच्यते । एतदेवाधारीकृत्य संक्षेपतो निरूप्यते विविधं च । (१) श्लेषप्रयोगाः—देवो नलं कामयते मदीयम् (१३-१७) श्लेषमूलकमर्थत्रयमेतस्य । त्रयोदशसर्गे पञ्चनली वर्णने (१३ २-३४) सर्वेऽपि श्लोकाः द्व्यर्थकाः पञ्चार्थका वा । 'देवः पतिर्विदुषि नैषध राजगत्या ' (१३-३४) पञ्चार्थकमेतत्पद्यम् । अन्ये च केचन श्लेषमूलाः श्लोकाः—१-१२, १-७७, १-८१ १-१११, १-११५, त्वादृशा नलदं विना न दहने तापस्य कोऽपि शमः (४-११६) । (२) व्याकरणसिद्धान्तवर्णनम्—क्रियेत चेत्साधुविभक्तिचिन्ता (३-२३) इत्यत्र 'अपदं न प्रयुञ्जीत' इत्यस्य वर्णनम् । किं स्थानिवद्भावमगात् (१०-११६) इत्यत्र स्थानिवदादेशो (१-१-५६) इति सूत्रस्य । अपवर्गे तृतीयेति भणतः पाणिनेरपि (१७-७ ) इत्यत्र अपवर्गे तृतीया' (२-३-६) इति सूत्रस्य । 'द्यावः स्थानिनी कौ (११-६ ) इत्यत्र द्युयोर्लोपायम्० (७-१-८५) इति सूत्रस्य । अधीतिबोधाचरणप्रचारणैः (१-४) इत्यनेन 'चतुर्भिः प्रकारैर्विद्योपयुक्ता भवति (महाभाष्य, प्रथमाह्निक) इत्यस्य । एकशेषः (१-८२, ७-५९), आदेशः (८-२१ १०-११६), अपादानम् (१७-११८), घु-संज्ञा (१९-२१), लप् (२१-१५२), आम्रेडितम् (२१-१५६) । (३) सांख्यसिद्धान्तवर्णनम्—सत्कार्यवादः—नास्ति जन्यजनकव्यति-भेदः (५-९४) । (४) योग०—सम्प्रज्ञातसमाधि—सम्प्रज्ञातवासिततमः समाधिः (२१-११८) । (५) न्याय-वैशेषिक०—परमाणुवादः—आद्यापित द्व्यणुकत्वपरमाणु-युग्मम् (३-१२५), मनसोऽणुत्वम्—मनोभिरासीदनणुप्रमाणैः (१-१७), न्यायस्य षोडशपदार्थत्वम्—द्विषोडशोदितैः षोडशभिः पदार्थैः (१ -८२), प्रत्यक्षलक्षणम् (१७-२४५), न्यायाभिमतमोक्षस्य परिहासः—मुक्तये यः शिलात्वाय (१७-७५) वैशेषिकाभिमत-तमःस्वरूपपरिहासः—औलूक्यमाहुः खलु दर्शनं तत् (२२-३५) । (६) मीमांसा०—देवतानामरूपित्वं मन्त्ररूपित्वं च—विग्रहम् (५-३९), मन्त्रमयत्वाम् (१४-७१) । स्वतःप्रामाण्यम्—स्वत एव सतां परार्थता (२-६१) मानवस्य कर्माधीनत्वमीश्वराधीनत्वं च—अनादिधाविवपरम्परया (१-१ २), श्रुतीनां प्रामाण्यम्—श्रुतिं श्रद्दधत विविक्षिताः (१७-६१) । (७) वेदान्त०—ब्रह्मसाक्षात्कारः—अथेव वेदाचि स्वमता नाम् (३-३), मुक्तदशा—या मुखश्चारि० (८ १५) विज्ञानशरीरम्—न तं मनस्तच्च न कायवायवः (९- ४), अद्वैतवादस्य तात्त्विकत्वम्—अद्वैततत्त्व इव सत्यतरेऽपि लोकाः (१३-३६) । (८) बौद्ध०—बौद्धाभिमतः धर्मवादो विज्ञानवादः साकारतावादश्च—धर्म्यात्मतावादमयोदरेण (१ -८८) । (९) जैन०—जैनाभिमतरत्नत्रयम्—त्रयीत्रि रत्नत्रितयी जिनेन (९-७१) । (१०) चार्वाकदर्शनम्—वर्णनमेतस्य सप्तदशे सर्गे (१७-३६-८३) विस्तरशः प्राप्यते । एवमेव वेदानां वेदाङ्गानामन्येषां च विषयाणामपि प्रतिपदं वर्णनं प्राप्यते । विविधशास्त्रादिप्रतिपादितसिद्धान्तवर्णनादेवास्य महाकाव्यस्य प्रतिपदं क्लिष्टत्वमापद्यते । अतः उच्यते—नैषधं विद्वदौषधम् ।

# १३ भारतीया संस्कृतिः

भारतीयसंस्कृतेर्विशिष्टिविचारे बहवोऽनुयोगाः समापतन्ति चेतसि । तेषां समासतोऽत्र विवरणमुपस्थाप्यते । का नाम संस्कृतिः ? कथमियमुपकरोत्यात्मनो मनसो जनस्य देशस्य संसृतेर्वा ? हेयोपादेयापेक्षया चैषा ? उपादेया चेदियं किं स्यात् स्वरूपमस्याः साम्प्रतिक्यां लोकसंस्थितौ ? कास्तावत् प्रातिस्विक्यो भारतीयसंस्कृतेः ? किमिव हि साम्यं क्षेममिह लोकस्य संस्कृत्याऽनया ? कानि च सन्ति कारणानि विश्वसंस्कृत्यापादनेऽस्याः ? इत्यादयः । संस्करणं परिष्करणं चेतस आत्मनो वा संस्कृतिरिति समभिधीयते । सा नाम संस्कृतिरेषा व्यपनयति सर्वं मनस्तमाछन्नं चेतसोऽज्ञानावरणमात्मनश्च । पापापनयपूर्वकमेषा प्रसादयति स्वान्तं, दुर्भावदमनपूर्वकं संस्थापयति स्वैर्यं चेतसि मनःशुद्धिपुरःसरं पावयत्यात्मानमपहरति च चित्तभ्रमम् । संस्कृतिरेषैषा चेतः प्रसादयति, मनोऽमलीकुरुते दुर्भावान् दमयते दुर्गुणान् वारयति, पापान्यपाकुरुते, दुःखान्यानि दहति, ज्ञानज्योतिर्विस्फारयति, अविद्यातमोऽपहन्ति, भूतिं भावयति, सुखं साधयति धृतिं धारयति गुणानागमयति, सत्यं स्थापयति, शान्तिं समादधाति च । न केवलमेषोपकर्त्री व्यष्टेरेवापि तु समष्टेरपि जीवनभूता । उपकरोति चैषाऽऽत्मनो मनसो लोकस्य राष्ट्रस्य संसृतेश्च । अतस्तमेषोपादेया सर्वैरेव स्वसुखममीप्सुभिः । स्वोन्नतिममीप्सता न यस्या केनाप्येषा हातुमुपेक्षितुं वा । उपेक्षितोपेक्षिता चैषा परिणमते स्वात्मविनाशाय लोकाहिताय च । अङ्गीकृतेऽस्या उपादेयत्वे तथैव स्यादस्याः स्वरूपं यत् साम्प्रतिक्यां लोकसंस्थित्यां नाहितं संभाव्यते । विविधाचारविचारव्यवहारात्मके विश्वेऽस्मिन् सैव संस्कृतिरुपादेयतामाप्स्यति या समेषां स्वान्तेषु सद्भावाभिमानपुरःसरं विश्वहितं विश्वबन्धुत्वं विश्वोपकारत्वं चादर्शत्वेनोररीकुर्यात् । अतः निष्पक्षतया यद् विभजनीया संस्कृतिरेव साम्प्रतमुपादानमर्हति, सैव च तापत्रयसन्तप्तं जगत् तापापनयनेन सुखनिधानं सम्पादयितुं प्रभवति ।

भारतीयसंस्कृतेः काश्चन प्रातिस्विक्यो मुख्या विशेषता अत्र प्रस्तूयन्ते । (१) धर्मप्राधान्यम्—मानवेषु धर्मप्राधान्यमेव तान् व्यवच्छेदयति पशुभ्यः । अत उक्तम्—'धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः' । नहि धर्मपदेन कश्चन सम्प्रदायविशेषोऽत्र विवक्षितः । कर्तव्यकार्याणि मूल्यवत्तानि मानवस्य व्याख्यातानि शास्त्रेषु धर्मरूपाण्याख्यातानि । तदेवाभ्यन्त—'धारणाद् धर्म इत्याहुर्धर्मो धारयते प्रजाः । यः स्याद् धारणसंयुक्तः स धर्म इति निश्चयः' । यमाश्च व्याख्याता योगदर्शने—'अहिंसा सत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः (योग २ १ )। एत एव सार्वभौमा महाव्रतमित्युच्यन्ते—'जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् (योग २ ११)। शास्त्रविहितमनुष्ठितं लोकस्य क्षेमावहं च धर्म इति व्यवस्थापितं वैशेषिकदर्शनकृता कणादेन 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' । (२) आध्यात्मिकी भावना—निखिलस्यापि संस्कृतस्याधारं भवति भावनाऽन्तरा । भावनैषा चेतः प्रसादयति आत्मानं मोक्षाभिमुखं प्रति प्रेरयति । उपनिषत्सु गीतायां चास्या भावनाया वर्णितं विविधं महत्त्वम् । अध्यात्मभावना प्रभवति मनसि सद्भावना तदनुभूतिर्वैराग्यादिकं च । (३) पारलौकिकी भावना—जगदिदं विनश्वरं, कीर्तिरेवैकाऽविनाशिनी । भौतिका विषया इमे आपातरम्याः परिणामविरसाश्च । एषामाश्रयेण पतनं मुख्यं, दुःखमाधाति दुःखम्, दुःखे नित्यं

प्रयुज्यमानाः सर्वेऽपि भावाः सहर्षमङ्गीकरणीया प्रयोक्तव्याश्च । नवभावावबोधनार्थं नूतना शब्दावली प्रयोक्तव्या निर्मातव्या वा । विदेशीयशब्दग्रहणेऽपि न संकोचप्रवृत्तिरास्थेया । (५) संस्कृतभाषाव्यवहारः—बोलिता भाषा च सैव भाषा या लोके व्यवह्रियते प्रयुज्यते च । संस्कृतभाषायाः प्रचाराय प्रसाराय चानिवार्यमेतद् यत् संस्कृतज्ञाः संस्कृतमाश्रित्यैव व्यवहरेयुः । भाषणे लेखने वादे विवादे संलापे पत्रादिव्यवहारे च संस्कृतमेव प्रयुञ्जीरन् । (६) नवग्रन्थरचना—नवीनान् विषयानाश्रित्य संस्कृते नवग्रन्थरचना स्यात् । साम्प्रतिके काले प्रचलिताः सर्वेऽपि विषयाः संस्कृतमाध्यमेन सुलभाः स्युः । एतदर्थं विविधविद्यानिष्णाताः संस्कृतज्ञाः सविशेषमुत्तरदायित्वं भजन्ते । तेषां चैतत्पावनं कर्म । (७) नवविषयाध्ययनम्—संस्कृतज्ञानां कृतेऽनिवार्यमेतद् यत् संस्कृताध्ययनेन सहैव भूगोलमैतिह्यं विज्ञानादिविषयान् विदेशीया भाषाश्चाधीयीरन् । विविधविद्याऽध्ययनमन्तरेणापूर्णं विद्यो विद्वत्त्वम् । (८) अन्वेषणकार्यम्—संस्कृतेऽन्वेषणकार्यस्य महत्यावश्यकता । अन्वेषणकार्यमेव गौरवायापि । अन्वेषणेनैव वाङ्मयस्य महत्त्वमुत्कर्षश्चावगम्यते । एतदर्थं महान् प्रयासोऽपेक्ष्यते । (९) संस्कृतग्रन्थानामनुवादः—संस्कृतस्य प्रचारार्थं प्रसाराय चावश्यकमेतद् यत् सर्वेषामपि प्रमुखानां संस्कृतग्रन्थानां न केवलं भारतीयासु भाषास्वेव प्रामाणिको ऽनुवादः स्यादपि तु विश्वस्य सर्वास्वेव प्रधानासु भाषासु तेषामनुवादः स्यात् । कार्यं चैतत् सरकारप्रयत्नेन जनसहयोगेन च सम्भवति । (१०) सुलभग्रन्थमालाप्रकाशनम्—सर्वेषामेव प्रमुखानामुपयोगिनां च संस्कृतग्रन्थानां सानुवादोऽल्पमूल्यकं संस्करणं प्रकाशितं स्यात् । महाकाव्यानां नाटकग्रन्थानां सारांशरूपं संस्करणं सानुवादं प्रचारार्थं प्रकाशितं स्यात् । (११) वैज्ञानिकदृष्टीसमाश्रयणम्—वैज्ञानिकीं दृष्टिं समाश्रित्य संस्कृतं प्रारिप्सूनां बालानां संस्कृतबोधिनां च कृते सुबोधा रुचिकराश्च ग्रन्था प्रणेयाः । (१२) संस्कृतस्यानिवार्यशिक्षणम्—आर्य(हिन्दी)-भाषया सहैव संस्कृतमपि सर्वेषु विद्यालयेष्वनिवार्यं स्यात् । संस्कृतमूलकमेव हिन्दीभाषाज्ञानं श्रेयोवहमिति सर्वेषां सुधियामैकमत्यम् । (१३) पठनपाठनपद्धतिपरिष्कारः—संस्कृतस्य प्रचारार्थमावश्यकमेतद् यत् संस्कृतस्य पठनपाठनप्रणाली साम्प्रतिकीं वैज्ञानिकीं पद्धतिमनुसरेत् । तत्र च स्यादावश्यकः परिष्कारः । (१४) विलुप्तग्रन्थोद्धारः—संस्कृतस्यानेके महान्तो ग्रन्था विलुप्ता विलुप्तप्राया जीर्णा शीर्णा वा यत्र तत्रोपलभ्यन्ते । तेषामुद्धार आवश्यकः । (१५) सर्वकारस्य सहयोगः—सर्वमुपरिनिर्दिष्टं सर्वकारसहयोगेनैव सम्भवति । सर्वकारस्य कर्तव्यमेतद् यत् स संस्कृतज्ञानाद्रियेत, संस्कृतप्रचारप्रसारे साहाय्यमाचरेत् राजकीयवृत्तिषु संस्कृतज्ञानमनिवार्यं कुर्यात्, संस्कृतविद्योद्धारे प्रयतेत च ।

सुगमतमाः सर्वेऽपि भावाः सरलमाश्रयणीयाः प्रयोक्तव्याश्च । नवभावावबोधनार्थं नूतना शब्दावली प्रयोज्या निर्मातव्या वा । विदेशीयनवशब्दग्रहणेऽपि न संकोचवृत्तिरास्थेया । (५) संस्कृतभाषाव्यवहारः—जीविता जागृता च सैव भाषा या लोके व्यवह्रियते प्रयुज्यते च । संस्कृतभाषायाः प्रचाराय प्रसाराय चानिवार्यमेतद् यत् संस्कृतज्ञाः संस्कृतमाश्रित्यैव व्यवहरेयुः । भाषणे लेखने वादे विवादे संलापे पत्रादिव्यवहारे च संस्कृतमेव प्रयुञ्जीरन् । (६) नवग्रन्थरचना—नवीनान् विषयानाश्रित्य संस्कृते नवग्रन्थरचना स्यात् । साम्प्रतिके काले प्रचलिताः सर्वेऽपि विषयाः संस्कृतमाध्यमेन सुलभाः स्युः । एतदर्थं विविधविद्यानिष्णाताः संस्कृतज्ञाः सविशेषमुत्तरदायित्वं भजन्ते । तेषां चैतत्पावनं कर्म । (७) नवविषयाध्ययनम्—संस्कृतज्ञानां कृतेऽनिवार्यमेतद् यत् संस्कृताध्ययनेन सहैव भूगोलभौतिकविज्ञानादिविषयान् वैदेशिकीं भाषां चाधीयीरन् । विविधविद्याऽध्ययनमन्तरेणाध्ययनस्य विधौ विस्तृतम् । (८) अन्वेषणकार्यम्—संस्कृतेऽन्वेषणकार्यस्य महत्त्वावश्यकता । अन्वेषणकार्येण पौरस्त्याप्यपि । अन्वेषणेनैव वाङ्मयस्य महत्त्वमुत्कर्षं चावगम्यते । एतदर्थं महान् प्रयासोऽपेक्ष्यते । (९) संस्कृतग्रन्थानामनुवादः—संस्कृतस्य प्रचारार्थं प्रसारार्थं चावश्यकमेतद् यत् सर्वेषामपि प्रमुखानां संस्कृतग्रन्थानां न केवलं भारतीयासु भाषास्वेव प्रामाणिकोऽनुवादः स्यादपि तु विश्वस्य सर्वास्वेव प्रधानासु भाषासु तेषामनुवादः स्यात् । कार्यं चैतत् सर्वकारप्रयत्नेन तत्सहयोगेन च संभवति । (१०) सुलभग्रन्थमालाप्रकाशनम्—सर्वेषामेव प्रमुखानामुपयोगिनां च संस्कृतग्रन्थानां सानुवादोऽल्पमूल्यकं संस्करणं प्रकाशितं स्यात् । महार्घाणां चाकरग्रन्थानां सारभूतं संस्करणं सानुवादं प्रचारार्थं प्रकाशितं स्यात् । (११) वैज्ञानिकशैलीसमाश्रयणम्—वैज्ञानिकीं शैलीं समाश्रित्य संस्कृतं प्रारिप्सूनां बालानां संस्कृतप्रेमिणां च कृते सुबोधा व्याकरणग्रन्थाः प्रणेयाः । (१२) संस्कृतस्यानिवार्यशिक्षणम्—आर्य(हिन्दी)-भाषया सहैव संस्कृतमपि सर्वेषु विद्यालयेष्वनिवार्यं स्यात् । संस्कृतमूलकमेव हिन्दीभाषाज्ञानं श्रेयोवहमिति सर्वेषां सुधियां मतैकमत्यम । (१३) पठनपाठनपद्धतिपरिष्कारः—संस्कृतस्य प्रचारार्थमावश्यकमेतद् यत् संस्कृतस्य पठनपाठनप्रणाली साम्प्रतिकीं वैज्ञानिकीं पद्धतिमनुसरेत् । तत्र च स्यादावश्यकः परिष्कारः । (१४) विलुप्तग्रन्थोद्धारः—संस्कृतस्यानेके महार्घा ग्रन्था विलुप्ता विलुप्तप्राया जीर्णाः शीर्णा वा यत्र तत्रोपलभ्यन्ते । तेषामुद्धार आवश्यकः । (१५) सर्वकारसहयोगः—सर्वमुपरिनिर्दिष्टं सर्वकारसहयोगेनैव सम्भवति । सर्वकारस्य कर्तव्यमेतद् यत् स संस्कृतज्ञानाश्रियेत, संस्कृतवाङ्मयप्रसारे साहाय्यमाचरेत्, राजकीयपदेषु संस्कृतज्ञानमनिवार्यं कुर्यात्, संस्कृतविद्योद्धारे प्रयतेत च ।

१६ नालम्बते दैष्टिकतां न निषीदति पौरुषे ।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ (शिशु० २-८६)

दैवस्योद्योगस्य च गुरुलाघवं बलाबलं च निरीक्षमाणानां विपश्चितामस्ति महीयसी विप्रतिपत्तिर्विषयेऽस्मिन् । केचन दिष्ट्या दैवस्य वा माहात्म्यमुद्घोषयन्ति, ते दैष्टिका इत्यभिधीयन्ते । अन्ये पौरुषस्य महत्त्वमाख्याय पुरुषार्थमेव सिद्धेः सोपानत्वेनाङ्गीकुर्वन्ति । एतयो मतयो विरोधे वर्तमाने केचन मनीषिणो द्वयोरेव समन्वयं श्रेयस्करमामनन्ते । विचारणीयं तावदेतद् यत्कतमा तयोरिह ज्यायसी । मानवजन्म सफलं लोका भुवनेऽस्मिन् मर्त्यो भुवि समासाद्य चिरसञ्चितपुण्यपरिपाकलभ्यमासाद्य मानवजीवनस्यास्य परिणामं तस्मादवन् ऐहिकमामुष्मिकं चोभयं क्षेममधिगच्छति ।

विमृश्यते तावद् दिष्ट्या एव स्वरूपं प्राक् । का नाम दिष्टिः, कथं च प्रभवेदा पौरुषैकस्योद्यमसमस्योत्कर्षापकर्षस्य पारतन्त्र्यस्य वा । यदि विचारदृष्ट्या निपुणं परीक्ष्यते तर्हि न भूयान् भेदोऽनयोः । प्राक्तनस्य कर्मण एव नामान्तरं दिष्टिरिति दैवमिति भाग्यमिति वा । अत आभाष्यते—'पूर्वजन्मकृतं कर्म तद् दैवमिति कथ्यते' । दिष्टिरेव साधकत्वेन बाधकत्वेन चोपतिष्ठते निखिलेषु क्रियमाणेषु कर्मसु । अतः कर्मणां सिद्धिरसिद्धिर्वा दैवाधीनेति मन्यते । प्राक्कृतकर्मफलपरिपाको नियतोऽस्य नियतिरिति च दैवस्य नामान्तरं भवति । न च नियतिः साम्प्रतिकैः कर्मभिरन्यथा भवितुमर्हतीति नियतेर्नियोगोऽनुल्लङ्घ्य इति गम्यते । अत्र दैष्टिका उदाहरन्ति—सूर्याचन्द्रमसौ तेजसा वरिष्ठौ नियतिपीडनादेवास्तं समुपगच्छतः । विद्या पौरुषं बलानुरूपं लोको दैवानुरूपमेव फलमश्नुते । सुरासुरकृतसमुद्रमन्थने समेऽपि भागे प्राप्तव्ये हरिर्लक्ष्मीं लेभे, हरस्तु हालाहलमेव । उक्तं च— "दैवं फलति सर्वत्र न विद्या न च पौरुषम् । समुद्रमथनाल्लेभे हरिर्लक्ष्मीं हरो विषम् ॥"

प्रतिकूलतामुपगते हि दैवे न मनागपि सिध्यति साध्यम् । अतएवाह माघः— "प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता । अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ।" ईदृशं दैवस्य प्राबल्यं पश्यतश्चेतस्येतदपि उदेति यद् दैवमभिलक्ष्यति । अत आह श्रीहर्षः—"अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसः स्पृहा । तृणेन वात्येव तयाऽनुगम्यते जनस्य चित्तेन भृशावशात्मना ।" विरुद्धे हि विधौ भव्यसद्धर्मपि विफलं स्यात् । भाग्येऽनुकूले दोषा अपि गुणत्वमुपयान्ति । उक्तं च— 'गुणोऽपि दोषतां याति वक्रीभूते विधातरि । सानुकूले पुनस्तस्मिन् दोषोऽपि च गुणायते ।' दुःखानि सुखानि च भाग्यानुसारमेव संभवन्ति । उच्यते च—'भाग्यक्रमेण हि धनानि भवन्ति यान्ति' । दैवानुसारमेव मनुष्यस्य बुद्धिरपि सम्पद्यते । विधिमाधिष्ठितकर्मानाप्तदुर्घटितस्य विघटने च दक्षः । 'अघटितघटितं घटयति सुघटितघटितानि दुर्घटीकुरुते । विधिरेव तानि घटयति, यानि पुमान्नैव चिन्तयति ।' सिद्धिरसिद्धिश्च दिष्ट्यनुसारमेव परिणमति ।

## १७ सहसा विदधीत न क्रियाम् (किरात २ ३ )

महाकवेर्भारवेर्महाकाव्ये किरातार्जुनीये सन्ति शतशः सूक्तिमुक्ताः । तत्रापि द्वित्राः सन्ति सूक्तयो याश्चकासति सर्वाभिभवमिव । तास्वन्यतमैषा सूक्तिः । सूक्तं तेन महाकविना यत् जनः कोऽपि सहसा किमपि विधेयं विदधीत यतो ह्यविवेकः परमापदां पदमस्ति । ये च विमृश्यकारिणो भवन्ति त एव श्रियः भजन्ते । यथोक्तं तेन—"सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ।"

को नाम विवेकः ? कश्चाविवेकः ? क उपयोगो विवेकस्य ? किमिह साध्यं विवेकेन ? यदि नोपादीयतेऽयं कथमिव विपदां निदानत्वेन परिणमते ? विवेचनमेव विवेक इति । सदसतोः पुण्यापुण्ययोः कर्तव्याकर्तव्ययोर्हेयोपादेययोश्च येन विधिवत् विवेचनं क्रियते स विवेक इत्यभिधीयते । इतरश्चाविवेक इत्याख्यायते । विवेकस्य महदुपयोगिता जीवनेऽस्मिन् । विवेक एव सदसतोः पापपुण्ययोः कर्माकर्मणोश्च सम्यक्त्वं गुरुलाघवं च निरूपयति । स एव किं ग्राह्यं किं हेयं किञ्चोपेक्ष्यमिति सन्दिशति । विवेक एवेह जगति ज्ञानमिति बुद्धिरिति धीरिति च व्यवह्रियते । विवेकमन्तरेण न भूयान् भेदो मनुष्येषु पशुषु च । अस्ति मानवे विवेकाधिक्यम् । यथा सोऽर्थमनर्थं च बहुधा विभाव्यार्थसाधकमुपादत्तेऽनर्थसाधकं चोज्झति । जीवने हि सर्वस्येष्टं सुखम् । सर्वो हि यतते सुखावाप्तये । नहि दुर्मेधोऽपि खलोऽपि मूढोऽपि हीनेन्द्रियोऽपि दुःखमिष्टत्वेन गणयति । सोऽपि सुखमेव कामयते, यतते च तदवाप्तये । अतीतस्यागामिनश्चावस्थायां को नु मार्गो यः सुखसाधकत्वेन प्रवर्तेत । विचारचक्षुषा चिन्त्यते चेद् विवेकस्य महत्त्वं स्फुटं प्रतीयते । सर्वमपि साध्यं साध्यते विवेकेनैव । विवेकपूर्वा कृतिरेव कल्पयति श्रियम् । विवेक एव सुखस्य मूलम्, शान्तेर्निधानम्, श्रियो निधानम्, श्रिय आश्रयः, गुणानामागारम्, विनयस्य भूमिः, उन्नतेः साधनम्, सत्कर्मणामाकरः, विजयस्य कारणम्, धीरस्य लक्षणम् । विवेक उपादत्तश्चेद् न जीवनेऽवसादावसरः । अनुपादत्तश्चेदयं प्रतिपदं प्रतिपदं चोपतिष्ठन्ते विपदो दुःखानि प्रभूतानि ।

ये हि विपश्चितो विचारशीलाश्च ते प्रतिपदं सम्यगवधार्य वस्तुस्थितिं शान्तेन स्वान्तेन कर्तव्यस्याकर्तव्यस्य च गुरुलाघवं विमृश्य यद् हितावहं सुखकारकं तदेवोपाददते । नहि प्रमादं वा हिंसां वा सहसा वा किञ्चित्तेऽनुतिष्ठन्ति । यत्कर्म सुविचार्य क्रियते तत् सत्फलमावहति । अत उच्यते—सुचिन्त्य चोक्तं सुविचार्य यत्कृतं, सुदीर्घकालेऽपि न याति विक्रियाम् (हितोपदेश १ २२) । ये चाविचार्य कर्मणि प्रवर्तन्ते, तेषां प्रवृत्तिरज्ञानमूला । अज्ञानं हि सर्वासामापदामास्पदम् । अज्ञानान्धत्वात् तेषां कर्मणां दुःखावाप्तिरेव सुलभा । तादृशा जना दिङ्मूढा इव सुखं दुःखमिति मन्यन्ते, दुःखं च सुखम्, पापं सुखसाधनमिति, पुण्यं च दुःखसाधनमिति । एवं ते व्यसनपरम्परामुपगच्छन्ति, प्रत्यवमवनतिं चोपगच्छन्ति । अत उक्तं भर्तृहरिणा—'विवेकभ्रष्टानां भवति विनिपातः शतमुखः' (नीति १ )।

विपश्चितो हि विचार्य सर्वमपि क्रियाकलापं कर्मणि प्रवर्तन्ते । बुद्धिमत्ताऽनिरस्ता नैव परमो गुणो यद्विमृश्य स कर्मसु प्रवृत्तिमादधाते । भूयसां सम्भावितविचारभूमैव । कि

